## ❋ दीपिका ❋

व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वं द्रढयति—**नन्विति**। उक्तव्याप्तौ= प्रतियोगिवृत्तित्वावगाहिन एव प्रतियोगितावच्छेदकत्वमिति नियमे। **तदवच्छेदकत्वेति**। प्रतियोगितावच्छेदकत्वेत्यर्थः। घटत्वेन द्रव्यं नास्तीति प्रतीत्या विशेषरूपेण सामान्याभावस्य द्रव्यत्वेन घटो नास्तीति प्रतीत्या च सामान्यरूपेण विशेषाभावस्य च सिद्धिरिति भावः। तदवृत्तिधर्मेण= प्रतियोग्यवृत्तिधर्मेण। तस्य = प्रतियोगिनः। विशेषरूपेण = घटत्वादिना। सामान्यस्य=द्रव्यादेः। सामान्यरूपेण= द्रव्यत्वादिना। विशेषस्य = घटादेः।

सामान्यरूपेण विशेषाभावमनङ्गीकुर्वतां मतं दूषयितुमुपन्यस्यति—**यत्त्विति**। **प्रागेव दूषितमिति**। तुल्ययुक्त्येत्यादिना ग्रन्थेन, बाधकाभाव एव मानमिति भावः। तादृशसम्बन्धेन = संयोगसम्बन्धेन। विरोधाभावं दर्शयति-गगनादेरधिकरणस्येति।

वस्तुतः दीधितिकृता यदि तदा इति पदाभ्यां तादृशप्रतीतेरानुभाविकत्वे विवादं सूचयता व्यधिकरणधर्मावच्छिन्नाभावस्यापारमार्थिकत्वं ध्वनितमिति नव्याः।

इति यतीन्द्रस्वामिश्रीरामप्रपन्नाचार्यविरचिता जागदीशीव्यधिकरणस्य
दीपिकाटीका समाप्ता।



**समाप्तश्चायं ग्रन्थः**

